## ॥ चतुश्श्लोकि भागवतं ॥

**श्रीभगवानुवाच**

ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितं ।
सरहस्यं तदंगं च गृहाण गदितं मया ॥

यावानहं यथाभावो यद्रूपगुणकर्मकः ।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ १ ॥

अहमेवासमेवाग्रे नान्यद्यत्सदसत्परं ।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहं ॥ २ ॥

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥ ३ ॥

यथा महांति भूतानि भूतेषूच्चावचेष्वनु ।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहं ॥ ४ ॥

एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः ।
अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥

एतन्मतं समातिष्ठ परमेण समाधिना ।
भवांकल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥

॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कंधे नवमेऽध्याये चतुश्श्लोकि भागवतं संपूर्णं ॥